## अथ सर्वमङ्गलादीनामर्थाः

इदानीं सर्वमङ्गलादिनाम्नां योगार्थानाह—

मङ्गलाऽर्हसि सर्वेषां तेन त्वं सर्वमङ्गला ।
वरदाऽसि च मर्त्यानां वरदा तेन कीर्त्यसे ॥ १०९ ॥
अशेषं जयसे दुर्गं दुर्गा तेन निगद्यसे ।
भक्तानां शं करोसीति शङ्करी त्वं तु गीयसे ॥ ११० ॥
संसारार्णवमग्नानां सर्वेषां प्राणिनामिह ।
दुर्गैका हि परः पोतो नराणां मुक्तये सदा ॥ १११ ॥
संसारार्णवमग्नानां दुर्गैका परमं पदम् ।
दुर्गैका देवताः सर्वा दुर्गैका कर्म वैदिकम् ॥ ११२ ॥
दुर्गैका परमं ज्ञानं दुर्गैका परमं बलम् ।
न त्वया रहितं किञ्चिद् भूतं स्थावरजङ्गमम् ॥ ११३ ॥
दुर्गैका परमा देवी दुर्गैका परमं पदम् ।
दुर्गैका परमं ज्ञानं दुर्गैका ज्ञानमेव च ॥ ११४ ॥
दुर्गैका परमं सत्यं दुर्गैका परमा गतिः ।
दुर्गैका परमं दैवं दुर्गैका परमौषधम् ॥ ११५ ॥
दुर्गैका सुखमत्यन्तं दुर्गैका निर्वृतिः परा ।
दुर्गैका परमा तुष्टिः दुर्गैका परमं यशः ।
दुर्गैका परमं तत्त्वं दुर्गाभिन्नमिदं जगत् ॥ ११६ ॥
प्राणप्रयाणपाथेयं संसारव्याधिभेषजम् ।
दुर्गार्णवपरित्राणं दुर्गानामाक्षरद्वयम् ॥ ११७ ॥

इति परिव्राजकाचार्यपरमहंसतीर्थावधूतश्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यां होमादिनिर्णयोनामाष्टादशोल्लासः ॥

॥ समाप्तश्चायं शाक्तानन्दतरङ्गिणीत्याख्यो ग्रन्थः ॥

# परिशिष्टम्–१

## ग्रन्थे उद्धृतग्रन्थानुक्रमणिका

—: ० :—

# परिशिष्टम्–२

## श्लोकार्धानुक्रमणिका

### आ

## ए

झ



ड



त

भ



म

# ग्रन्थे शुद्धाशुद्धिप्रदर्शनम्

| अशुद्धयः | शुद्धयः |
|---|---|
| दीक्षा = | दीक्षां (पृ २, श्लो० १) |
| द्विपः = | द्वीपः (७,४८) |
| व्याधिवंद्धनापथ्यं = | व्याधिवर्द्धनापथ्यं (१२,९९) |
| प्राणप्रिष्ठां = | प्राणप्रतिष्ठां (२०,४०) |
| तात्तीयं = | तार्तियं (२४,७७) |
| निष्फलस्य = | निष्कलस्य (३६,२) |
| निष्कालो = | निष्कलो (३७,६) |
| परिव्रजकाचार्यं = | परिव्राचकाचार्यं (४३, अन्ते) |
| ब्रह = | ब्रह्म (४५-१४) |
| भाव चिन्ता = | भावचिन्ता (५३-९१) |
| व्रजासनं = | वज्रासनं (६८-२२) |
| संकुर्यात् = | संस्कुर्यात् (७४-३९) |
| वर्णोज्ज्लां = | वर्णोज्ज्वलां (१०५ = ७६) |
| वशेषसेतुमाह = | विशेषसेतुमाह (१२२-११) |
| शरणे = | शरेण (१४१ = ३७) |
| तत्पन्याः = | तत्पत्न्याः (१४७ = ९४) |
| एक्षद्वयं = | लक्षद्वयं (१४८ = २०८) |
| साष्टरत्ति द्विमासकम् = | साष्टरत्तिर्द्विमासकम् (१५७-२५) |
| दक्षिणां = | पक्षिणां (१६३ = ८५) |
| लामदाहोद्भवं = | लोमदाहोद्भवं (१६३-८५) |
| पुरुषेण = | पुष्पेण (१७० = ५५) |
| देवि ! = | देवि (१७२ = ७७) |
| त्र = | च (१७७ = १२२) |
| तिस्रोतः = | त्रिस्रोतः (१८२ = १४) |
| कृशोदारि ! = | कृशोदरि ! (१८५ = ३७) |

| | |
|---|---|
| काक्यमपि = | वाक्यमपि (१८८ = ७८) |
| पञ्चाङ्लं = | पञ्चाङ्गलं (२०८ = ३३) |
| शरणे = | शरेण (२११ = ३) |
| अन्तरीक्षाय = | अन्तरिक्षाय (२५२१ = ०८) |



